**कुशस्थली सा कुशलैकगम्या प्रशस्तकीर्तेः प्रथिता पुरीयम् ।**
**शरीरिणां सर्वपुमर्थसार्थकरी नरीनर्तु मदन्तरङ्गे ॥ ३५ ॥**

**व्या :** कुशस्थलीति। **शरीरिणां सर्वपुमर्थसार्थकरी** सकलपुरुषार्थ-समूहप्रदा। **कुशलैकगम्या** सज्जनैकगम्या। **प्रथिता** पुराणादिषु प्रसिद्धा। **प्रशस्तकीर्तेः** श्रीकृष्णस्य। सेयं कुशस्थली द्वारवती **पुरी मदन्तरङ्गे** मम मानसे **नरीनर्तु** नृत्यतु। सदा मद्ध्यानगोचराऽस्त्वित्यर्थः ॥ ३५ ॥

**वन्दारुद्विजवर्यवाञ्छितनिजध्यानः क्षमाशङ्करः**
**स्ववर्वाग्मिव्रजवर्ण्यदिग्विततिकृत्कर्मौघराजत्करी ।**
**रुद्राणीपतिमान्यराजितगतिः सत्यासहायः सतां**
**तां रेमे वरदः स्वबन्धुरुचिरां रक्षन् पुरीमद्भुताम् ॥ ३६ ॥**

**व्या :**वन्दारुद्विजवर्येति। **वन्दारुद्विजवर्यैः** वन्दनशीलब्राह्मणश्रेष्ठैः **वाञ्छितः निजध्यानो** यस्य स तथोक्तः। क्षमायाः भूमेः शं सुखं करोतीति **क्षमाशङ्करः**। **स्वः** स्वर्गे ये **वाग्मिनो** बृहस्पत्यादयः तेषां **व्रजेन** समूहेन **वर्ण्यानि दिक्षु विततिं** विस्तारं **कुर्वतीति** दिग्विततिकृन्ति। दिक्षु विस्तृता-नीत्यर्थः। तानि च तानि **कर्माणि** च तेषाम् **ओघैः** समूहैः **राजत्करी** अस्या-स्तीति **स्ववर्वाग्मिव्रजवर्ण्यदिग्विततिकृत्कर्मौघराजत्करी**। **रुद्राणीपतिना** पार्वती-पतिना शिवेन। **मान्या** मानिता **राजितगतिः** शोभितगतिः। कैलासयात्राख्या यस्य स तथोक्तः। **सत्यासहायः** सत्याभामा सहायो यस्य स तथोक्तः। **सतां वरदः** श्रीकृष्णः **स्वबन्धुभिः** यादवैः सह **रुचिराम् अद्भुताम्** आश्चर्यभूतां **तां पुरीं रक्षन् रेमे**। **चक्रबन्धोऽयं श्लोकः**। अस्मिन् श्लोके **वादिराजकृत-रुग्मिणीशविजय** इति कविनाम काव्यनाम चास्तीति द्रष्टव्यम्। **चक्रबन्धोद्धारप्रकारस्तु** - मण्डलाकारेण एकां रेखां लिखित्वा मध्ये पश्चिमभागस्थितरेखामारभ्य पूर्वभागस्थरेखापर्यन्तं पूर्वायामं रेखाद्वयं मध्ये यथा

वीथी भवति तथा लिखेत्। तथोत्तरभागस्थितरेखामारभ्य दक्षिणायामं रेखाद्वयं दक्षिणभागास्थितरेखापर्यन्तं मध्ये यथा वीथी भवति तथा लिखेत्। तथा वायव्यदिग्भागस्थितरेखामारभ्य आग्नेयदिग्भागस्थितरेखापर्यन्तं दीर्घा-कारेण रेखाद्वयं पूर्ववल्लिखेत्। एवं वीथीत्रयलेखने षट्कोणचक्राकारता भवति। तत्र एकैकपादस्थिताष्टदशाक्षराणां वीथीत्रयस्यादावन्ते च अष्टादशाक्षरस्थानानि यथा भवन्ति तथा परितः पुनरपि रेखाष्टकं लिखेत्। पादत्रयमध्यस्थितैकवर्णस्य मध्ये एकमेव स्थानं कल्पयेत्। एवम् एकोनविंशतिवर्णात्मकपादत्रयं प्रागायत-वीथीम् आरभ्य वीथीत्रये लिखेत्। अन्त्यपादस्थितैकोनविंशत्यक्षरेषु आद्याक्षरं पुनर्वर्णद्वयमध्यस्थितपञ्चाक्षराणि च विहाय द्वे द्वे वीथीत्रयमध्यस्थित-षट्कोणेषु लिखेत्। उर्वरितानि षडक्षराणि तु पादत्रयाद्यन्तस्थषडक्षरात्मकत्वात् न पृथक् लिखेत्। एवं चक्रबन्धे श्लोकपादचतुष्टयाक्षराणां लेखने कृते सति वीथीत्रय-स्थितपादत्रयादिभागस्थवर्णत्रयात् तृतीयेषु स्थानत्रयेषु वीथीत्रयस्थपा-दत्रयान्तिमवर्णत्रयात् पूर्वभागास्थितस्थानत्रितयेन **रुग्मिणीशविजय** इति काव्यनाम भवति। पूर्ववत् पादत्रयादिभागस्थाष्टमस्थानत्रिके चरमभाग-स्थिताष्टमस्थानत्रिके च **वादिराजकृति**रिति कविनाम च भवति। स्थानपञ्चके वर्णद्वयं द्वेधा यथा आयाति मध्यस्थाने अन्तिमस्थाने च वर्णद्वयं द्वेधा यथा आयाति द्वादशस्थानेषु काव्यनाम कविनाम च यथा आयाति तथा प्रागेवालोच्य पद्यरचना कर्तव्या। अतः कवेरिदं महत्कौशलम्॥ ३६॥

**कृष्णस्योदयवर्णनैः सुचरितस्तोमस्तवैः सूक्तिभिः**
**सुश्लोकैः सुभगा रसैश्च विविधैः स्वानन्दसर्गैर्वृता।**
**दुष्टागम्यनिजार्थतोषितखगा साऽस्याः कृतेर्वैखरी**
**बिभ्राणेव विभाति विट्ठलपुरी विष्वक्सुवर्णोज्ज्वला** ॥ ३७॥

**व्या : कृष्णस्येति -कृष्णस्य उदयः** धनागमाद्युदयः तस्य **वर्णनैः** इन्द्रेण

सुधर्मा दत्ता। कुबेरेण निधयो दत्ताः। समुद्रेण नानाविधरत्नानि दत्तानि। भूस्थराजादिभिः नानाविधद्रविणानि दत्तानि। इत्यादिवर्णनैः श्रीकृष्णस्य **सुचरितानां** दानव्रतयज्ञादिसत्कर्माचरणानां **स्तोमः** समूहः तस्य **स्तवैः** स्तुतिभिः। कृष्णस्य **सूक्तिभिः** मनोहरवचनैः श्रीकृष्णस्येति सर्वत्र सम्बन्धः। श्रीकृष्ण**सुश्लोकैः** दुष्टसंहरणसमुद्रामृतीकरणादिशोभनयशोभिः **सुभगा** मनोहरा। कव्यपक्षे तु केषुचित्सर्गेषु श्रीकृष्णस्योदयवर्णनैः अलौकिकाकारेणायमुदितो न तु लौकिको बाल इवेति वर्णनैः सूर्योदयसाम्यादिवर्णनैश्च **सुभगा**। केषुचित्सर्गेषु चरितस्तोमैः पूतनावधमारभ्य रुग्मिणीविवाहकुमारोदयपर्यन्तं सुचरितानां स्तोमस्तवैः **सुभगे**ति सर्वत्र सम्बन्धः। **सूक्तिभिः** उत्प्रेक्षाद्यलङ्काररचितवचनैः **सुश्लोकैः** अनुप्रासाद्यलङ्कृतपद्यैः **सुभगा**। समीचीनः आनन्दः **स्वानन्दः** सुखं तस्य **सर्गः** उत्पत्तिः येभ्यस्ते तथोक्ताः तैः। **विविधैः रसैः** मधुरादिषड्रसैः **वृता**। काव्यपक्षे विविधैः रसैः शृङ्गारादिभिः शोभनः आनन्दः येभ्यस्ते स्वानन्दाः ते च ते सर्गाः तैः। शुभकरपरिच्छेदैः वृता। **दुष्टैः** दुर्जनैः **अगम्याः** अप्राप्याः **निजार्थाः** स्वोपवनादिषु विद्यमानफलादिपदार्थाः **तैस्तोषिताः खगाः** पक्षिणो यया सा। काव्यपक्षे **दुष्टैः** अव्युत्पन्नैः **अगम्याः** ज्ञातुमशक्याः **निजार्थाः** शब्दर्थाः तैः **तोषिताः**। खे आकाशे गच्छन्ति ते **खगाः** देवाः यया सा। **विष्वक्** समन्तात् **सुवर्णेन** हेम्ना **उज्ज्वला**। काव्यपक्षे समीचीनावर्णैः अक्षरैः **उज्ज्वला**। **सा विठ्ठलपुरी** श्रीकृष्णपुरी द्वारावती **अस्याः कृतेः** काव्यस्य **वैखरी** प्रौढिं **बिभ्राणेव विभाति** ॥ ३७ ॥

**यस्मिन् मङ्गलदेवताऽखिलजगन्माता रमा नायिका**
**पद्मापद्मभवादिसेव्यचरणस्तद्वल्लभो नायकः।**
**अश्वग्रीवदयापयोब्धिफलितं प्राग्र्योक्तिरत्नोज्ज्वलं**
**तद्दासानुगवादिराजरचितं काव्यं विभाव्यं बुधैः** ॥ ३८ ॥

**व्या** : एवं समापितकाव्यः कविः **कविकुलाग्रेसरः श्रीवादिराजमुनिः**

स्वकृतस्य काव्यस्य नायिकानायकौ प्रदर्शयन् सर्वोपादेयतामाह - **यस्मिन्निति**। **यस्मिन्** काव्ये। **मङ्गलदेवता अखिलजगन्माता रमा** रुग्मिणी **नायिका**। **पद्मा** लक्ष्मीः **पद्मभवो** ब्रह्मा तदादिभिः **देवैः सेव्यचरणः**। तस्याः रुग्मिण्याः **वल्लभः** प्रियः श्रीकृष्णः **नायकः**। **अश्वग्रीवस्य दया** कृपैव **पयोब्धिः** क्षीरसमुद्रः तेन **फलितानि** उत्पन्नानि **प्रग्रयोक्तिरत्नानि**। तैः **उज्ज्वलम्**। **तस्य** हयग्रीवस्य **दासाः** श्रीमदाचार्यादयः तेषाम**नुगेन** भृत्येन **वादिराजेन** वादिराजाख्ययतिना **रचितं काव्यम्**। **बुधैर्विद्वद्भिः**। **विभाव्यम्** उपादेयं प्रतिपाद्यम्। नायिकानायकयोरत्युत्तमत्वात् इदं **काव्यं** विद्वद्भिरुपादेयं भवेदित्यर्थः ॥३८॥

**कृष्णः काव्यकृते स्वहस्तकलच्छत्रं प्रदद्यात् प्रभुः**
**सच्छास्त्राभिधरम्यराज्यपदवीं सुज्ञानयानं मुदा।**
**स्वाङ्घ्र्याराधनकङ्कणं करयुगे कैङ्कर्यहारं गले**
**स्वात्मानं हृदि नित्यचिन्तनधनं सद्युक्तिरत्नान्यपि ॥ ३९ ॥**

**व्या** : इदानीं विरक्तयतित्वेन लौकिकफलानपेक्षः काव्यकर्ता कविः लौकिकानां कटकछत्रशिबिकादीनामेव लोके श्लाघ्यत्वात्, लौकिकफलोपमतया स्वालौकिकफलं काव्यनायकादभ्यर्थयते - **कृष्ण** इति। **प्रभुः** काव्यनायकः **श्रीकृष्णः काव्यकृते** मह्यं **मुदा** प्रीत्या **स्वहस्तकमलच्छत्रं प्रदद्यात्**। स्वहस्तकमलं मच्छिरसि निदध्यादित्यर्थः। छत्रस्यापि कमलाकारत्वात् मस्तकोपरि धार्यमाणत्वाच्च। स्वस्तोतुर्भक्तस्य मम मस्तके कृपया निक्षिप्तं हरेर्विस्तृतहस्तकमलमेव छत्रमिति भावः। **सच्छास्त्राभिधरम्यराज्यपदवीं** सत् निर्दोषं यच्छास्त्रं वेदन्तशास्त्रमित्यर्थः। तदिति अभिधा नाम यस्य तत्तथोक्तम्। यद्रम्यराज्यं तदेव पदवीं पदं ताम्। स्वप्रभुत्वपोषकस्य स्वेन सदा विचार्यमाणस्य राजयोग्यवस्तुनो राज्यत्वात् विद्वदग्रेसरत्वाख्यप्रभुत्वपोषणहेतुभूतं सदा विचारास्पदं यतिराजयोग्यं वेदान्तशास्त्रमेव मम राज्यमिति भावः। **सुज्ञानयानं**

सम्यग्ज्ञानलक्षणान्दोलिकाम् अतिदूरस्थमोक्षनारीप्राप्तिहेतुभूतत्वात् ज्ञानस्य यानत्वमिति भावः। **करयुगे स्वाङ्घ्र्याराधनमेव कङ्कणं** रत्नखचितं कङ्कणम्। 'शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा' इति वचनात् हर्याराधनमेव करभूषणमिति भावः। **गले** कण्ठे **कैङ्कर्यहारं** दास्यरूपकण्ठ-मालाम् अवनतकन्धरस्यैव दासत्वात्। ''कामं तु दास्ये'' इत्युक्त्वा श्लाध्यत्वाच्च दास्यमेव कण्ठभूषणमिति भावः। **हृदि स्वात्मानम्**। अतितुष्टो राजा सदा स्वभृत्यगृह एव तिष्ठतीत्यत इदं प्रार्थितमिति भावः। **नित्यचिन्तनधनं सदा** ध्यानलक्षणं धनम्। **सत्यो** निर्दुष्टाः या **युक्तयः** ता एव **रत्नानि** तान्यपि हरिसर्वोत्तमत्व**साधकयुक्तिरत्नान्यपि** मुदा प्रदद्यात्। ध्यानस्य धनत्वं युक्तीनां रत्नत्वं च सुप्रसिद्धमेवेति भावः॥ ३९॥

**हंसानां हृदयङ्गमं कविलसद्भृङ्गादृतं मौक्तिक**
**प्रख्यप्रयोक्तिनवं प्रबन्धजलजं पादेऽर्पितं स्याद्धरेः।**
**लक्ष्मीरम्यकरे वरामरततेः सन्मानसे शारदा-**
**नन्दं तत्पवनः स्वहृत्कृतगुणं विस्तारयत्वञ्जसा ॥ ४० ॥**

**व्या** : इदानीं स्वकृतकाव्यं श्रीपरिवारसहितकृष्णार्पितं कुर्वन् काव्यस्य प्रचयं प्रार्थयमानः श्रीकृष्णमाहात्म्यवर्णनपरत्वात् श्रीकृष्णप्रियस्य स्वकाव्यस्य श्रीकृष्णचरणसमर्पणयोग्यतां रुग्मिणीरूपलक्ष्मीविवाहोत्सववर्णनेन श्रीकरपरि-ग्रहयोग्यतां सकलसुराणां स्वरूपेण परमप्रियत्वयोग्यतां वाग्विलासदात्र्याः भारत्याः सुखप्रदत्वयोग्यतां स्वमतरहस्यवर्णनपरत्वात् वैष्णवमतधुर्यमध्वाचार्य-स्वरूपिपवनविस्तार्यत्वयोग्यतां रमादीनां हरिप्रसादालम्बित्वरूपतत्त्वं च स्पष्टं दर्शयितुं मृदुत्वमनोहरत्वादिगुणैः श्राव्यं काव्यं कमलतया वर्णयति - **हंसानामिति**। **प्रबन्धजलजम्**। काव्याख्यकमलं जलाज्जातमिति व्युत्पत्तेः। जलजमिति वदता स्वगर्वपरिहारोऽपि सूच्यते। कीदृशं प्रबन्धजलजम्। **नवम्**

अपर्युषितम्। छायापहारमिति ध्वनिः। पुनः कीदृशम्। **हंसानां हृदयङ्गमम्**। हरिविषयकत्वात् परमहंसप्रियम्। कमलमपि हंसपक्षिप्रियम्। पुनः कीदृशम्। **कवय** एव **लसन्तो भृङ्गाः तैरादृतम्**। पुनः कीदृशम्। **मौक्तिकप्रख्याः** मुक्ताहारसदृशाः **अग्र्या** उत्तमाः **उक्तयो** यस्य स तथोक्तः तम्। कमलमपि निधितया मुक्ताफलजन्मभूमित्वात् मौक्तिकोपेतम्। एतादृशं प्रबन्ध एव काव्यमेव जलजं हरेः **पादे अर्पितं स्या**दित्यन्वयः। कमलेन हरिचरणार्चनस्योचितत्वात् हरिचरणस्यापि कमलस्थानत्वादिति भावः। पश्चा**ल्लक्ष्मीरम्यकरे** अर्पितं स्यादिति सम्बन्धः। इदं **प्रबन्धजलजं लक्ष्मीः करेण** गृहीत्वा लालयत्वित्यर्थः। 'पद्मद्वयाभयकरोद्यतपद्महस्ताम्' इत्युक्त्या लक्ष्मीकरस्य पद्मयोगस्थानत्वादिति भावः। अनन्तरं **वरामरततेः** उत्तमब्रह्मादिसमूहस्य **सन्मानसे** समीचीनमनसि अर्पितं स्यादित्यन्वयः। मानससरोवरे कमलावस्थितेरौचित्यादिति भावः। ब्रह्मादयो देवाः इदं काव्यं स्वमनसि आनीय सन्तोषं कुर्वन्त्वित्यर्थः। वागभिमानित्वात् विशिष्य सरस्वतीपरिग्राह्यत्वं मुख्यप्राणमतानुवृत्तित्वात् तेन प्रचयं च प्रार्थयमान आह-**शारदेति**। **पवनः** मुख्यप्राणः **शारदायाः** सरस्वत्याः **आनन्दः** सन्तोषो यस्मात् तत् तथोक्तम्। **स्वहृत्कृतगुणं** स्वहृदि अङ्गीकृतगुणः स्वमतोक्तरीत्या विष्णुसर्वोत्तमत्वादिभगवद्गुणवर्णनरूपगुणो यस्य तत्तथोक्तम्। स्वमतप्रतिपादितभगवन्महिम्नामेव वर्णनात् स्वमनःप्रियमिति भावः। कमलपक्षे **स्वहृदि** स्वान्तर्भागे **कृतः** स्थापितः **गुणः** सौरभ्यादिः येन तत् तत्काव्यजलजं **अञ्जसा** सम्यक् **विस्तारयतु**। यथा वायुः कमलोदरस्थसौरभ्यगुणं सङ्गृह्य दिक्षु विस्तारयति। तथा पवनरूपत्वान्मुख्यप्राणः स्वमतानुकूलमेतत् काव्यजलजं **विस्तारयतु**। सकलजनमनस्तोषकरतया दिक्षु दिक्षु बुधश्लाध्यतरं करोत्वित्यर्थः। श्रीहरिचरणसमर्पणानन्तरं लक्ष्म्यादीनां प्रियत्वोक्तेः तेषां तद्दासता सूचितेति सर्वमवदातम्॥ ४०॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाध्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मणीशविजये सद्वादिराजोदिते**
**सर्गोऽभूत् सुरमण्डलीषु सुतरामेकोनविंशो मुदाम् ॥ ४१ ॥**

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये एकोनविंशः सर्गः ॥

**व्या : रोम्णामिति । सुरमण्डलीषु मुदां एकोनविंशः सर्गः अभूदि-**
त्यर्थः ॥

न शब्दशास्त्रे प्राविण्यं नालङ्कारनये तथा ।
केवलं गुरुकारुण्याट्टीकेयं लिखिता मया ॥ १ ॥

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थ श्रीचरणविरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायणभट्टविरचितायां श्रीगुरुभावप्रकाशिकायां एकोनविंशः सर्गः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

****

# ಶ್ರೀ ರುಕ್ಮಿಣೀಶವಿಜಯದಲ್ಲಿ ಉದಾಹೃತ ಸುಭಾಷಿತ ರತ್ನಗಳು

ಸರ್ಗ-ಶ್ಲೋಕ

1-9 **ಅಕೌಶಲೇನ ಗ್ರಥಿತೇತಿ ಜಾತಿ ಪ್ರಸೂನಮಾಲಾಂ ಕಿಮು ಸಂತ್ಯಜಂತಿ ॥**
ಒಳ್ಳೆಯ ಜಾತಿಯ ಜಾತೀಕುಸುಮಗಳಿಂದ ಕಟ್ಟಲ್ಪಟ್ಟ ಮಾಲೆಯನ್ನು ರಸಿಕರು ಎಂದಾದರೂ ಪರಿತ್ಯಜಿಸುವರೆ? (ಭಗವಂತನ ಮಹಿಮೆಯು ಹಾಗೆ)

1-10 **ವಿದಗ್ಧೈಃ ಕಿಮುಪೇಕ್ಷಣೀಯಾ ಪಯೋಬ್ಧಿಜಾ ಚಂಚಲತಾಖ್ಯದೋಷಾತ್ ॥**
ಕ್ಷೀರಸಮುದ್ರದಲ್ಲಿ ಜನಿಸಿದ ಲಕ್ಷ್ಮೀದೇವಿಯು 'ಚಾಂಚಲ್ಯ ದೋಷ ಉಳ್ಳವಳು' ಎಂಬ ಕಾರಣದಿಂದ ಅವಳನ್ನು ಉಪೇಕ್ಷಿಸುವರೇ? ಇಲ್ಲ.

1-26 **ಸಂಪ್ರೇಕ್ಷಯಂತಿ ಸ್ಮ ನರೈರ್ನರೇಂದ್ರಾಃ ಶಯ್ಯಾಂ ಸ್ವಕೀಯಾಂ ಪುರತಃ ಪ್ರಯಾಣೇ।**
ರಾಜರು ಪ್ರಯಾಣ ಸಂದರ್ಭದಲ್ಲಿ ಸೇವಕಜನರಿಂದ ತಮ್ಮ ಹಾಸುಗೆ ಮುಂತಾದವನ್ನು ಮುಂಚಿತವಾಗಿಯೇ ಕಳುಹಿಸುತ್ತಾರೆ.

1-44 **ತಥಾ ಹಿ ತುಷ್ಟಿರ್ಭುವಿ ಕಸ್ಯ ನ ಸ್ಯಾತ್ ಅದೃಷ್ಟಪೂರ್ವಸ್ಯ ನಿರೀಕ್ಷಣೇನ ॥**
ಹಿಂದೆ ಕಂಡಿರದಂತಹ ವಸ್ತುವಿನ ಸಂದರ್ಶನದಿಂದ ಯಾವನಿಗೆ ತಾನೆ ಸಂತೋಷವಾಗುವದಿಲ್ಲ?

1-48 **ಯದೀಯ ರೂಪಂ ಪ್ರಕಟೀಕರೋತಿ ಪಿತಾ ಸ ತಸ್ಯೇತಿ ಹಿ ವೇದವಾದಃ ॥**
ಯಾವನು ಯಾವನ ಸ್ವರೂಪವನ್ನು ಪ್ರಕಟಮಾಡುತ್ತಾನೆಯೋ ಅವನು ಅವನಿಗೆ ತಂದೆಯು.

1-59 **ಕರಸ್ಥದೇವಸ್ಯ ಕುತೋಽಂತರಾಯಃ ॥**
ಕೈಯಲ್ಲಿ ಭಗವಂತನಿರಲು ವಿಘ್ನಗಳೆಂಬ ಆತಂಕವೆಲ್ಲಿಯದು?

2-22 **ಬಿಭೇತಿ ಸರ್ವಃ ಪರುಷಾನ್ನಶಾಂತಾತ್ ।**
ಜನರು ಕ್ರೂರಸ್ವಭಾವದವರಿಗೆ ಅಂಜುವರೇ ವಿನಃ ಶಾಂತ ಸ್ವಭಾವದವರಿಗಲ್ಲ

2-23 **ವಿಷ್ಣು ಪದಾನುಷಕ್ತಕರಃ ಕಥಂ ನೋರ್ಧ್ವಮುಪೈಸಿ ಲೋಕಃ ॥**
ಶ್ರೀವಿಷ್ಣುಪದದಲ್ಲಿ (ಆಕಾಶ-ಭಗವಂತ) ಆಸಕ್ತವಾದ (ಪೂಜಿಸುವ) ಕರಗಳುಳ್ಳ ಜನರು ಹೇಗೆ ಉನ್ನತಗತಿಯನ್ನು ಹೊಂದುವುದಿಲ್ಲ.

2-24 **ಶ್ರೇಯೋಽನುಜಸ್ಯಾಪಿ ನ ವೈ ಸಹಂತೇ ॥**
ಲೋಕದಲ್ಲಿ ತಮ್ಮ ತಮ್ಮನ ಶ್ರೇಯಸ್ಸನ್ನೂ ಸಹ ಸಹಿಸರು.

2-25 **ಕ್ರೂರೋऽಪಿ ಮರ್ತ್ಯಃ ಸ್ವಕಲತ್ರಸಾಂದ್ರಸಂಬಂಧಭಾಜಾಂ ನ ಹಿ ತಾಪದಾಯೀ॥**
ಮನುಷ್ಯನು ಎಷ್ಟೇ ಕ್ರೂರನಿದ್ದರೂ ತನ್ನ ಸತಿಯ ನಿಕಟ ಸಂಬಂಧವುಳ್ಳವರಿಗೆ ತಾಪವನ್ನು ಉಂಟುಮಾಡುವುದಿಲ್ಲ.

2-29 **ಪ್ರಿಯೇಷು ನೂತ್ನೇಷು ಹಿ ಕಸ್ಯ ತೃಪ್ತಿಃ।**
ಪ್ರಿಯವು ನೂತನವೂ ಆದ ವಿಷಯಗಳ ಬಗ್ಗೆ ತೃಪ್ತಿಯು ಯಾಕೆ ಆದೀತು?

2-38 **ಕೃತ್ಯಾ ಮಹತಿ ಪ್ರಯುಕ್ತಾ ಸ್ವಕೀಯ ಮೃತ್ಯುತ್ವಮುಪೈತಿ ಪೃಥ್ವ್ಯಾಮ್ ॥**
ಲೋಕದಲ್ಲಿ ಮಹಾತ್ಮರಲ್ಲಿ ಪ್ರಯೋಗಿಸಲ್ಪಟ್ಟ ಕೃತ್ಯವು ಸ್ವಮೃತ್ಯುವಿಗೇ ಕಾರಣವಾಗುವದು.

2-45 **ಕಿಂ ಚೇಷ್ಟಯಾ ತುಷ್ಯತಿ ಕಾಮಧೇನುಃ॥**
(ಹುಲಿಯ ಕೈಗೆ ಸಿಕ್ಕ) ಗೋವು ಚುಂಬನ ಮುಂತಾದ ಚೇಷ್ಟೆಗಳಿಗೆ ಎಂದಾದರೂ ಸಂತೋಷವನ್ನು ಹೊಂದುವದೆ?

2-48 **ಜ್ಞಾನಂ ವಿನಾ ಯನ್ನ ಹಿ ಬಂಧಮೋಕ್ಷಃ।**
ಸಂಸಾರ ಬಂಧನದಿಂದ ಬಿಡುಗಡೆಯು ಜ್ಞಾನದಿಂದ ಮಾತ್ರ.

2-50 **ಅವೈಷ್ಣವಾನಾಂ ಯತನೈರ್ನ ಮೋಕ್ಷಃ।**
**ಪತನ್ತ್ಯಧಸ್ತಾಮಸವೃತ್ತಯಸ್ತೇ॥**
ವೈಷ್ಣವರಲ್ಲದ ತಾಮಸಜೀವಿಗಳು ಎಷ್ಟೆ ಪ್ರಯತ್ನಿಸಿದರೂ ಮೋಕ್ಷ ಸಿಗದು. ವಿಷ್ಣು ದ್ವೇಷದಿಂದ ಅಧೋಗತಿಯನ್ನೇ ಹೊಂದುವರು.

2-51 **ನಿಂದಾಂ ಮುಕುಂದಸ್ಯ ಸಕೃನ್ನಿಶಮ್ಯ ಮಂದಃ ಪತೇತ್ ।**
ಮೋಕ್ಷಪ್ರದನಾದ ಭಗವಂತನ ನಿಂದೆಯನ್ನು ಒಮ್ಮೆ ಕೇಳಿದ ಮಾತ್ರದಿಂದಲೇ ಮಂದನೂ ಸಹ ಅಧೋಗತಿಯನ್ನು ಹೊಂದುವ.

2-67 **ವಿನಾಶಕಾಲೇ ವಿಪರೀತ ಬುದ್ಧಿಃ।**
ವಿನಾಶಹೊಂದುವ ಕಾಲದಲ್ಲಿ ವಿಪರೀತ (ತಪ್ಪು ತಿಳುವಳಿಕೆ) ಬುದ್ಧಿಯು ಉಂಟಾಗುವದು.

3-5 **ಅಯೋಗ್ಯ ಕಾಮಸ್ಯ ಕಥಂ ನ ಪಾತಃ।**
ತನ್ನ ಯೋಗ್ಯತೆಗೆ ಮೀರಿದುದನ್ನು ಬಯಸುವವನಿಗೆ ಅದಃಪತನವು ಏಕೆ ಆಗುವುದಿಲ್ಲ?

3-20 **ಪ್ರಿಯೇರಿತಃ ಪ್ರೀತಿಕರೋ ಹಿ ಲೋಕೇ।**
ಅತಿ ಪ್ರೀತಿಪಾತ್ರರಾದವರು ಕರೆವ ಹೆಸರಿನಲ್ಲಿ ಅತಿ ಪ್ರಿಯವಾಗಿರುವದು ಲೋಕ ಪ್ರಸಿದ್ಧವಲ್ಲವೆ!

3-27 **ಕಿಂವಾಽತಪ್ಯತ ಸಾ ತ ಪೋಽಸ್ಯ ಜನನೀ ಯಸ್ಯೇದಮೀದೃಕ್ಫಲಂ।**
(ಯಶೋದೆ) ತಾಯಿ ಆಗಿ (ಕೃಷ್ಣನಿಗೆ) ಹಾಲುಕೊಟ್ಟು ಮುದ್ದಿಸುವವಳಾಗಲು ಎಂತಹ ತಪಸ್ಸನ್ನಾಚರಿಸಿದಳೋ, ಎಂತಹ ತಪಸ್ಸಿಗೆ ಇಂತಹ ಫಲವು ದೊರೆಯುವುದೋ!

3-37 **ಲಕ್ಷ್ಮೀನಯನಾಂತಭಾಜಾಮಸಹ್ಯ ದೋಷೋಽಪಿ ಭವೇದ್ಗುಣಾಯ।** ಲಕ್ಷ್ಮೀಕಟಾಕ್ಷ ಭಾಗಿಗಳಾದವರಿಗೆ ದೋಷವೂ ಮಹದ್ಗುಣವೇ ಆಗುವದಷ್ಟೇ !

3-39 **ಕಃ ತ್ಯಜತಿ ಸಿದ್ಧವಿದ್ಯಾಂ।**
ಲೋಕದಲ್ಲಿ ಸ್ವಭಾವಸಿದ್ಧವಾದ ಅಭ್ಯಸಿಸಿದ ವಿದ್ಯೆಯನ್ನು ಯಾವನು ತಾನೆ ಬಿಡುತ್ತಾನೆ?

4-1 **ಭಕ್ತ್ಯೈಕವಶ್ಯಃ ಪ್ರಭುಃ।**
ಸರ್ವಪ್ರಭುವಾದ ಭಗವಂತ ಭಕ್ತರ ಭಕ್ತಿಗೆ ವಶನಾಗುವನು.

4-4 **ಕ್ಷಿಣೋತಿ ನೂನಂ ಧನಲೋಭಭಾಜಾಂ ಧನಾನ್ಯನರ್ಹತ್ತ್ವತ್ರಿದಿಶ್ಯ ದೇವಃ।**
ಭಗವಂತ ಧನದಲ್ಲಿ ಲೋಭ ಮಾಡಿ ಧರ್ಮಬಾಹಿರರಾದವರ ಸಂಪತ್ತನ್ನು ಕ್ಷೀಣಗೊಳಿಸುವ.

4-7 **ನಹಿ ರೋಷವಿದ್ಧಂ ಮನೋನ ಮೀನಾತ್ಯಮರಾನುಭಾವಮ್।**
ರೋಷಾವಿಷ್ಟವಾದ ಮನಸ್ಸು ದೇವತೆಗಳ ಸಾಮರ್ಥ್ಯವನ್ನು ಅರಿಯುವುದಿಲ್ಲ ವಷ್ಟೆ!

4-24 **ಹರೌ ಪ್ರಸನ್ನೇ ಕಿಮು ಹಾಸ್ಯಸಾಧ್ಯಮ್।**
ಶ್ರೀಹರಿಯು ಪ್ರಸನ್ನನಾಗಲು ಅಸಾಧ್ಯವಾದುದು ಏನಿದೆ?

4-29 **ಸ ಏಷ ಧರ್ಮೋ ಗೃಹೀತ ಮಾಯಸ್ಯ ಚ ತಸ್ಯ ಪಾತಃ।**
ಕಪಟ ಮಾಯಾವಿಯಾದವನನ್ನು ಕೆಡಹುವದು ಶ್ರೀಹರಿಗೆ ಧರ್ಮವೇ ಸರಿ.

4-30 **ಕೃಷ್ಣಪ್ರತಿಪಕ್ಷಿಪಕ್ಷಃ ಕಥಂ ನ ಪಾತ್ಯೈಕ ಫಲಸ್ತ್ವದೈವ।**
ಶ್ರೀಕೃಷ್ಣನ ಪ್ರತಿಪಕ್ಷಿಯ ಪಕ್ಷವನ್ನವಲಂಬಿಸಿದವನಿಗೆ ಹೇಗೆ ತಾನೆ ಪಾತೈಕಫಲ ವಾಗದೇ ಇರುವದು.

4-59 **ಸ ವೇತ್ತಿ ಬಲಂ ಶ್ರವಣೋಜ್ಝಿತಃ ಪರಮಯಾ ರಮಯಾ ಶ್ರುತಿಭಿಃಸ್ತುತಮ್ ।**
ಕಿವಿಗಳೇ ಇಲ್ಲದವನಿಗೆ ಪರಳಾದ ರಮೆಯಿಂದ, ಶ್ರುತಿಗಳಿಂದ ಪ್ರತಿ ಪಾದ್ಯನಾದ ಶ್ರೀಹರಿಯ ಒಲವನ್ನು ಹೇಗೆ ತಾನೆ ಅರಿಯಬಲ್ಲನು?

4-62 **ನನರ್ತಿ ಸುಹೃದಾಗಮನೇನ ಕಃ ।**
ನರ್ತಿಸಲು ಆಸಕ್ತಿಹೊಂದಿದವನು ತನ್ನವರ ಆಗಮನವಾದರೆ ಯಾರು ತಾನೆ ಮತ್ತಿಷ್ಟು ಕುಣಿಯುವುದಿಲ್ಲ.

4-65 **ಯಥಾಪರಾಧಂ ನನು ದಂಡದಾತಾ ।**
ಶೌರಿಯಾದ ಶ್ರೀಕೃಷ್ಣನು ಅಪರಾಧಮಾಡಿದವರಿಗೆ ತಕ್ಕ ಶಿಕ್ಷೆಯನ್ನು ಕೊಡುತ್ತಾನೆ.

4-66 **ನಿಜೇಷು ಶಿಕ್ಷಾಪಿ ಹಿ ತಸ್ಯ ವಿಷ್ಣೋಃ ಪರಂ ಪರಾನುಗ್ರಹ ಹೇತುರೇವ।**
ಭಕ್ತರಲ್ಲಿ ಪರಮಾತ್ಮನ ನಿಗ್ರಹವು ಅನುಗ್ರಹಾತಿಶಯಕ್ಕೆ ಕಾರಣವಾಗುವದು.

4-69 **ನಾರೀಮೃದುಭಾಷಣೇನ ನ ಕಸ್ಯ ಚಿತ್ತಂ ಮೃದುತಾಮುಪೈತಿ ।** ನಾರಿಯರ ಮೃದು ಭಾಷಣವನ್ನು ಕೇಳಲು ಯಾರ ಮನಸ್ಸಾದರೂ ಮೃದುವಾಗುವುದಿಲ್ಲವೆ!

4-70 **ನ ಕಸ್ಯ ಯೋಷಿತ್ಸು ಹಿ ಪಕ್ಷಪಾತಃ ।**
ಪುರುಷರಿಗೆ ಸ್ತ್ರೀ ಪಕ್ಷಪಾತವು ಸ್ವಾಭಾವಿಕವಲ್ಲವೆ!

4-71 **ಕ್ರೋಧೋಽಪಿ ದೇವಸ್ಯ ವರೇಣ ತುಲ್ಯಃ ।**
ಪರಮಾತ್ಮನ ಕೋಪವೂ ಭಕ್ತರಲ್ಲಿ ವರಕ್ಕೆ ಸಮಾನವಾದುದೇ ಆಗುತ್ತದೆ.

5-8 **ಸ್ವನಾಸಿಕಾಚ್ಛೇದಮಪೀಹ ಸೋಢ್ವಾ ಖಲೋ ನಿರುಂಧೇ ಖಲು ಸತ್ಪ್ರಯಾಣಂ ।**
ತನ್ನ ಮೂಗನ್ನಾದರೂ ಕೊಯ್ದುಕೊಂಡು (ಅಪಶಕುನ) ಸಜ್ಜನರ ಸತ್ಪ್ರಯಾಣವನ್ನು ನಿರೋಧಿಸುವದು ದುಷ್ಟರ ಸ್ವಭಾವವಲ್ಲವೆ!

5-10 **ಕೃಷ್ಣ ವಿಪಕ್ಷಮೈತ್ರೀ ಕಿಮು ಸೌಖ್ಯದಾತ್ರೀ ।**
ಶ್ರೀಕೃಷ್ಣನ ವಿರೋಧಿಯಾದವರು ಹೇಗಿದ್ದರೂ ಸಹವಾಸಕ್ಕೆ ಅನರ್ಹರೇ, ಅಂತಹವರ ಸಹವಾಸ ಎಂದಿಗೂ ಸುಖಕೊಡದು.

5-12 **ಖಲಃ ಪ್ರಕೃತ್ಯಾ ಖಲು ಗೂಢವೃತ್ತಿಃ ।**
ಸ್ವಭಾವತಃ ದುಷ್ಟನು ವಂಚಕನೇ ಆಗಿ ಒಳಗೊಳಗೆ ಇತರರಿಗೆ ವಂಚಿಸಿ, ಮೇಲೆ ಸಾಧುವಿನಂತೆ ತೋರುವ.

5-14 **ಪ್ರಭೋಃ ಕ್ರಿಯೈಕಾಪ್ಯುರುಕಾರ್ಯ ಸಾಧಿಕಾ ।**
ಪ್ರಭುವಾದ ಶ್ರೀಕೃಷ್ಣನು ಒಂದೇ ಕೆಲಸದಿಂದ ಅನೇಕ ಕಾರ್ಯಗಳನ್ನು ಮಾಡಿ ಸಜ್ಜನರನ್ನು ರಕ್ಷಿಸುವ.

5-16 **ಫಲಾರ್ಥಿನಾಂ ಕಿಂ ನ ವಿಷಹ್ಯಮಸ್ತಿ।**
ಮೋಕ್ಷಾರ್ಥಿಗಳಾದ ಜ್ಞಾನಿಗಳಿಗೆ ಅಸಾಧ್ಯವಾದುದು ಯಾವುದಿದೆ?

5-17 **ಸ್ವಭಾವಃ ಖಲು ಚಂಚಲಾನಾಮ್ ।**
ಚಂಚಲ ಸ್ವಭಾವವುಳ್ಳವರು ಸಜ್ಜನರಲ್ಲಿ ಸೌಜನ್ಯತೆಯಿಂದ ದುರ್ಜನರಲ್ಲಿ ದೌರ್ಜನ್ಯದಿಂದ ವರ್ತಿಸುವರಷ್ಟೆ!

5-22 **ದುಷ್ಟಸ್ಯ ವಿನಾಶತೋಽನ್ಯತ್ಸತಾಂ ಮನಸ್ತೃಪ್ತಿಕರಂ ಕಿಮಸ್ತಿ।** ಸತ್ಪುರುಷರಿಗೆ ದುಷ್ಟರ ವಿನಾಶಕ್ಕಿಂತಲೂ ತೃಪ್ತಿಕರವಾದುದು ಮತ್ತಾವುದೂ ಇಲ್ಲವಷ್ಟೆ!

5-26 **ಹರಿಪದವಿಮುಖಾನಾಂ ಪೋಷಣಃ ಫಲಮಲಭಿಷತಾಲಂ ತೈಃ ಸಹೇತ್ಯಸ್ಮದೂಹಃ ।**
ಶ್ರೀಹರಿಯ ಪಾದದಿಂದ ವಿಮುಖರಾದವರಿಗೆ ಆಶ್ರಯಕೊಟ್ಟರೇ ದೊರೆಯುವುದು ಬಲು ಅಲ್ಪ ಫಲವೇ।

5-29 **ವಿನಾಶ ಶೂನ್ಯಸ್ಯ ಹಿ ಕಿಂ ನ ಕಾರ್ಯಮ್ ।**
ನಾಶವೇ ಇಲ್ಲವಾದವರಿಗೆ ಅಸಾಧ್ಯವಾದ ಕಾರ್ಯ ಯಾವುದಿದೆ?

5-31 **ಮತ್ತ್ಯೋಽಪಕಾರನಿರತಸ್ಯ ನ ಕಃ ಸಹಾಯಃ।**
ಭಗವಂತನನ್ನಾಶ್ರಯಿಸಿ ಪರೋಪಕಾರಿಯಾದವರಿಗೆ ಯಾವನು ಸಹಾಯಕನಾಗುವುದಿಲ್ಲ!

5-32 **ಕಾಮಂ ಪರೋಪಕೃತಿಲಗ್ನಮನೋರಥಾನಾಂ ಕ್ಷೇಮಂಕರತ್ವಮುಪಯಾಂತಿ ಹಿ ಶತ್ರವೋಽಪಿ ॥**
ಸ್ವತಃ ಪರೋಪಕಾರಾಸಕ್ತ ಮನೋರಥವುಳ್ಳವರಿಗೆ ಶತೃಗಳಾದರೂ ಆ ಸಂದರ್ಭದಲ್ಲಿ ಮಿತ್ರರೇ ಆಗುತ್ತಾರೆ.

5-34 **ವಿಷ್ಣೋಃ ಪದಮಧಿಗತಾಯಾತ್ಯುದಾರಾಯ ದಾನಾದಬ್ದಿಂ ದೂನಾಮಪಿ ಶತಗುಣಾ ವೃದ್ಧಿರದ್ಧಾ ಸ್ವವರ್ಗೇ।**
ನಿತ್ಯದಲ್ಲೂ ಪರಮಾತ್ಮನ ಪಾದಾರವಿಂದವನ್ನಾಶ್ರಯಿಸಿ ಅತ್ಯುದಾರನಾದವನಿಗೆ ನೀರಿನ ಹನಿಯನ್ನು ಕೊಟ್ಟರೂ ಕೊಟ್ಟವನ ವಂಶಕ್ಕೆ ಅದರ ನೂರರಷ್ಟು ಪ್ರತಿಫಲಿಸುವುದಷ್ಟೇ!

5-41 **ಕಥಂ ಹಿಮಾನೀಮಬಲಾಃ ಸಹನ್ತೇ।**
ಅಬಲರು ಛಳಿಯನ್ನು ಹೇಗೆ ಸಹಿಸುತ್ತಾರೆ?

5-51 **ಯುಕ್ತಂ ಹಿ ತನ್ಮುರರಿಪೋರನುಗಾ ವಿರಾಗಾ**
**ಯತ್ನಂ ಕದಾಚಿದಪಿ ನ ಸ್ವಕೃತೇ ಪ್ರಕುರ್ಯುಃ।**
ಯುಕ್ತವೆ, ಶ್ರೀಮುರಾರಿಯ ಪಾದಾನುಗರು ಎಷ್ಟೇ ಕಷ್ಟವಾಗಿದ್ದರೂ ವಿರಕ್ತರಾಗಿ ಶ್ರೀಹರಿಯನ್ನೇ ನಂಬಿ, ಯಾವ ಪ್ರಯತ್ನ ಮಾಡದೆ ಶ್ರೀಶನ ಹೆಸರಿನಿಂದ ಬದುಕುತ್ತಾರೆ. ಎಂದಿಗೂ ಸ್ವಾರ್ಥಿಗಳಾಗರು.

5-53 **ಪುಂಸ್ತ್ವೇನ ಕಿಂ ಪೂರುಷಮೌಲಿಭಾಜಾಮ್।**
ಪುರುಷೋತ್ತಮನ ಒಲಿಮೆಗೆ ಪುರುಷರೇ ಆಗಬೇಕೆ?

5-56 **ನಿಗಮೈಕವೇದ್ಯೇ ಕಿಮಕ್ಷಿಬಾಹುಲ್ಯಮುಪೈತಿ ಕೃತ್ಯಮ್।**
ನಿಗಮೈಕವೇದ್ಯನಾದ ಪರಮಾತ್ಮನ ವಿಷಯದಲ್ಲಿ ಬಾಹ್ಯೇಂದ್ರಿಯ ಗಳು ಎಷ್ಟಿದ್ದೇನು ಪ್ರಯೋಜನ?

6-8 **ವಿಪತ್ಸು ಕಃ ಸ್ವೀಯಮುಪೇಕ್ಷತೇಽಗ್ರ್ಯಃ।**
ಆರ್ಯನಾದ ಉತ್ತಮನು ತನ್ನನ್ನು ಆಶ್ರಯಿಸಿದವರನ್ನು ವಿಪತ್ಕಾಲದಲ್ಲಿ ಎಂದಿಗೂ ಉಪೇಕ್ಷಿಸುವುದಿಲ್ಲ.

6-10 **ಗೋಬ್ರಾಹ್ಮಣರಕ್ಷಕಸ್ಯ ಕ್ವ ಕೃಷ್ಣದೋರ್ದಂಡಧೃತಸ್ಯ ಕಂಪಃ।**
ಗೋ-ಬ್ರಾಹ್ಮಣ ರಕ್ಷಕರಾಗಿಯೂ, ಶ್ರೀಕೃಷ್ಣನ ಕರಧೃತರಾಗಿಯೂ ಇರುವವರಿಗೆ ಎಂದಿಗಾದರೂ ಕಂಪನ(ಅಂಜಿಕೆ)ಉಂಟೇ?

6-13 **ಶಿಶೋಃ ಕರೇ ಹಸ್ತಿಸಹಸ್ರಮಸ್ತಿ।**
ಕೂಸಿನ ಕೈಯಲ್ಲಿ ಸಹಸ್ರಾರು ಆನೆಗಳಿವೆ. (ಅನೇಕ ಆನೆಗಳಿಗೆ ಆಶ್ರಯವಾದ ಗೋವರ್ಧನ ಪರ್ವತವನ್ನು ಶ್ರೀಕೃಷ್ಣ ಎತ್ತಿದಾಗ)

6-16 **ಕಿಂ ನ ಸುಕರಂ ನಿತ್ಯಂ ಕ್ಷಮಾಧಾರಿಣಃ।**
ನಿರಂತರವೂ ಕ್ಷಮಾಗುಣವುಳ್ಳ ಸಹನಶೀಲರಿಗೆ ಅಸಾಧ್ಯವಾದ ಕಾರ್ಯವು ಯಾವುದಿದೆ?

6-28 **ವಿಧೇರ್ನಿದೇಶೋ ಮಹತಾಪ್ಯಲಂಘ್ಯಃ।**
ವಿಧಿಯ ವಿಲಾಸವು (ದೇವರ ಆಜ್ಞೆ) ಎಂತಹ ಮಹನೀಯರಿಗೂ ಮೀರಲು ಅಸಾಧ್ಯವು.

6-31 **ನಷ್ಟಾಃ ಪ್ರಿಯಾಃ ಖಲು ಸಮೃದ್ಧಿಯುಜೋಽಪಿ ವಕ್ತ್ರಮ್।**
ಲೋಕದಲ್ಲಿ ಎಷ್ಟೇ ಸಮೃದ್ಧಿಯಾದ ಸಂಪತ್ತು ತುಂಬಿ ತುಳುಕು ತ್ತಿದ್ದರೂ ಪ್ರಿಯವಿಯೋಗವಾಯಿತೆಂದರೆ ಮುಖಬಾಡುವುದು ಸಹಜವೆ!

6-35 **ಆಶಾ ಹಿ ನೂತ್ನವಿಷಯಾ ಗಣಯಂತಿ ನೈನಃ ।**
ಲೋಕದಲ್ಲಿ ನೂತನ ವಿಷಯಗಳ ಸಂಬಂಧ ಸಂದರ್ಭದಲ್ಲಿಯ ಅಭಿಲಾಷೆಗಳು ಪಾಪವನ್ನು ಎಣಿಸುವುದಿಲ್ಲ.

6-48 **ಸದ್ವಂಶಜಾತಲಲನಾಸು ನ ಕಸ್ಯ ಪಕ್ಷಃ ।**
ಸದ್ವಂಶಜಳಾಗಿ ಸ್ವಾಧೀನದಲ್ಲಿರುವವಳಲ್ಲಿ ಯಾರಿಗೆ ತಾನೆ ಪಕ್ಷಪಾತವಿರದು?

6-49 **ಮಧುರನಿನದ ಭಾಜಾಂ ಕಿಂ ನ ಸಾಧ್ಯಂ ಹಿ ಲೋಕೇ ।**
ಲೋಕದಲ್ಲಿ ಮಧುರಭಾಷಿಗಳಿಗೆ ಮಾಡಲು ಅಸಾಧ್ಯವಾದು ದುಂಟೆ?

6-58 **ತನ್ನಿತ್ಯಂ ಪಿತರಂ ಪತಿಂ ಚ ಜನನೀಂ ತ್ವಾಮೇವ ಸೇವಾಮಹೇ ।**
ಸರ್ವಸ್ವಾಮಿಯಾದ ನೀನು (ಕೃಷ್ಣ) ನಿಜವಾಗಿಯೂ ತಂದೆ, ತಾಯಿ, ಪತಿಯು. ನಿನ್ನ ಬಿಟ್ಟು ಬೇರೆಯದನ್ನು ಅರಿಯೆವು. ನಿನ್ನನ್ನೇ ನಿತ್ಯ ಸೇವಿಸುವೆವು.

7-35 **ಸ್ನಿಗ್ಧೇ ಭರ್ತರಿ ಕಾಮಿನೀಜನರುಚಿಸ್ತತ್ಪಕ್ಷ ಏವ ಹ್ಯಲಂ ।**
ಗಂಡನಾದವನು ತನ್ನ ಕಾಮಿನಿಯಲ್ಲಿ ಪ್ರೀತಿಯಿಂದಿರಲು, ಅವರ ಪ್ರೀತಿಯು ಸದಾ ಗಂಡನ ಕಡೆಯಲ್ಲಿಯೇ ಇರುತ್ತದೆ. ಕಾಮಿನಿಯರ ಪತಿ ಪಕ್ಷಪಾತವು ವಿಹಿತವೇ.

8-6 **ಋಣೀತ ದಾಸೀರ್ಯದಿನೋಽವನೇ ನಃ ।**
ಕೊಟ್ಟಮಾತು ಸಲ್ಲಿಸದವರು ಋಣಿಗಳೆಂದು ಶಾಸ್ತ್ರಪ್ರಸಿದ್ಧಿಯು.

8-44 **ಕಿನ್ನಾಮ ನಾಸ್ತಿಮುನಿಮಾರ್ಗಜುಷಾಂ ಹಿ ಲೋಕೇ ।**
ಲೋಕದಲ್ಲಿ ಋಷಿಮುನಿಗಳ ಮಾರ್ಗವನ್ನು ಅನುಸರಿಸಿದವರಿಗೆ ಯಾವ ಸೌಖ್ಯವು ದೊರಕದು?

8-46 **ನ ಹಿ ಕಥಾವ್ಯರ್ಥಾ ಪರಬ್ರಹ್ಮಣಃ ।**
ಪರಬ್ರಹ್ಮನ ಕಥಾಶ್ರವಣಾದಿಗಳಲ್ಲಿ ಕಾಲ ಕಳೆದವರಿಗೆ ಸುಖವಾಗದೇ ಎಂದಿಗಾದರೂ ವ್ಯರ್ಥವಾಗುವುದೇ?

8-52 **ಆನಂದಮೂರ್ತಿಂ ಪರಿರಭ್ಯ ಮರ್ತ್ಯಃ ।**
**ಕೋನಾಮ ನೋ ನೃತ್ಯತಿ ಸಿದ್ಧಕೃತ್ಯಃ ॥** ಜ್ಞಾನಾನಂದಮಯವಾದ ಶರೀರವುಳ್ಳ ಪರಮಾತ್ಮನನ್ನು ಆಲಿಂಗಿಸಿ ಕೃತಕೃತ್ಯರಾದವೆಂದು ಯಾರು ತಾನೆ ಕುಣಿಯರು.

8-53 **ಗುರುಕಾರ್ಯಲಾಭೇ ಲಘ್ವರ್ಥಸಾಧನಕೃತಿರ್ನಹಿ ದೃಷ್ಟಪೂರ್ವಾ ।**
ಲೋಕದಲ್ಲಿ ದೊಡ್ಡ ಪ್ರಯೋಜನವು ಲಾಭವು ಸಿದ್ಧಿಸುವಾಗ ಅಲ್ಪಕಾರ್ಯ ಪ್ರಯತ್ನವು ಉದಾಸೀನಾರ್ಹವೇ ಅಲ್ಲವೆ?

10-8 **ಅಪಿ ಶಿರಸಿ ಧೃತೋ ಯತ್ಸ್ವೀಯ ಏವಾಂತಕಾಲೇ ।**
**ಕರವಶಮುಪಯಾತಃ ಶತ್ರುತಾಮೇತಿ ಶತ್ರೋಃ ॥**
ಪ್ರಪಂಚದಲ್ಲಿ ತನ್ನ ಸಂಪತ್ತು ಶಿರಸಾಧಾರಿಯೇ ಆಗಿದ್ದರೂ ಅಂತ್ಯಕಾಲದಲ್ಲಿ ಅದು ಶತೃಗಳವಶವಾದರೆ ಅದೇ ಶತೃರೂಪವಾಗಿ ಮೃತ್ಯುವಿಗೆ ಕಾರಣವಾಗುತ್ತದಲ್ಲವೆ?

10-15 **ಕರೋದಯಾನ್ವೀಕ್ಷ್ಯ ಪರಸ್ಯ ಜಾತಾನಸೂನಸೂಯಾ ಭಾರತಾಸ್ತ್ಯ ಜಂತಿ**
ಅಸೂಯೆ ಹೊಂದಿದ ಅಯೋಗ್ಯರು ಪರರ ಅಭಿವೃದ್ಧಿಯನ್ನು ಕಂಡು ಮಾತ್ಸರ್ಯದಿಂದ ಪ್ರಾಣವನ್ನು ತ್ಯಜಿಸುವರು.

10-45 **ವಿಜೇತುಕಾಮೋ ನಿವಾರ್ಯಮಾಣೋಽಪಿ ನಿವರ್ತತೇ ಸ್ಮ ।** ಜಯವನ್ನೇ ಸಂಪಾದಿಸಲು ಇಚ್ಛೆಯುಳ್ಳ ಸಮರ್ಥನು ಎಷ್ಟು ತಡೆದರೂ ಹಿಂತಿರುಗನು.

10-49 **ದಾಸ್ಯೈಕವಶ್ಯಃ ಪ್ರಭುಃ ।**
ಸದಾ ಸತ್ಕರ್ಮಾನುಷ್ಠಾನಾದಿಗಳಿಂದ ಜ್ಞಾನಿಯಾದವರಿಗೆ ಭಕ್ತ್ಯೈಕವಶ್ಯನಾದ ಶ್ರೀಕೃಷ್ಣನು ದೃಶ್ಯನಾಗುವನು.

10-71 **ಮುಕ್ತೋಽಪಿ ನೈವೋಜ್ಝತಿ ಕೃಷ್ಣಸೇವಾಮ್ ।**
ಮುಕ್ತನೇ ಆದರೂ ಶ್ರೀಕೃಷ್ಣನ ಸೇವೆಯನ್ನು ಎಂದಿಗೂ ಬಿಡನು.

10-76 **ಶ್ರೇಯೋ ವಿನಾ ಪುಣ್ಯ ಮುಪಾರ್ಜಯೇತ್ಕಃ ।**
ನಿನ್ನ ಅನುಗ್ರಹಾತಿಶಯವಿಲ್ಲದವರಿಗೆ ಪರಿಪೂರ್ಣನಾದ ನಿನ್ನನ್ನು ನೋಡುವ ಭಾಗ್ಯ ದೊರೆಯುವದೇ?

11-9 **ಅನುಕೂಲಮಿತುಂ ಬಾಲಾಂ ಕರ ಏವ ಹಿ ಕಾರಣಮ್ ।**
ಲೋಕದಲ್ಲಿ ಬಾಲಿಕೆಯು ಅನುಕೂಲಳಾಗಲು ಕರವೇ (ಹಣವೇ) ಕಾರಣವಲ್ಲವೆ?

11-11 **ಕೃಷ್ಣಃ ಕಥಂ ಜಡತಮಸ್ಯ ಬಲಿಂ ಸಹೇತ ।**
ಸಕಲ ದೇವತೆಗಳಿಗೆ ಮುಖ್ಯ ದೈವನಾದ ಶ್ರೀಕೃಷ್ಣನ ಮುಂದೆ ಜಡವಾದುದು (ಕಂಸನ ಧನುಸ್ಸು) ಪೂಜೆಗೊಂಬುದು ಎಂದಿಗಾದರೂ ಸಹ್ಯವಾದೀತೆ?

11-12 **ವಕ್ರಹೃದೋ ಹಿ ಪುಂಸಃ ಕೋ ವಾ ಗುಣಃ ಕೋವಿದಮಾನಯೋಗ್ಯಃ॥**
ಲೋಕದಲ್ಲಿ ಸದ್ವಂಶಜ, ಗುಣಾಢ್ಯ, ಸುಶಿಕ್ಷಿತನಾದರೂ ಕುಟಿಲ ಹೃದಯ ದವನಾದರೆ ಜ್ಞಾನಿಗಳಿಂದ ಖಂಡಿತನೇ ಆಗಲಿ ಶ್ಲಾಘ್ಯಾರ್ಹನಾಗನು.

11-14 **ದ್ವೈದೀಭಾವಂ ವಿಪಕ್ಷೇ ವಿರಚಯತಿ ಬತ ಸ್ವೀಯ ಏವ ಸ್ವಶತ್ರುಃ ।**
ವಿಪರೀತ ಕಾಲದಲ್ಲಿ (ಗ್ರಹಚಾರ ಸಂದರ್ಭದಲ್ಲಿ) ಸ್ವಕೀಯರು (ಸ್ವವಸ್ತುಗಳೇ) ಶತ್ರುಗಳಾಗುತ್ತಾರಲ್ಲವೆ?

11-42 **ಗತಫಲಮತಿಯತ್ನಾಭ್ಯಸ್ತವಿದ್ಯಾನವಸ್ಥಾ ಫಲತಿ ಸಹಜ ತೇಜೋ ಬುದ್ಧಿ ಭಾಜಾಂ ಕಿಮಗ್ರೇ।**
ಸಹಜವಾದ ವಿದ್ಯಾಬುದ್ಧಿಗಳುಳ್ಳವರ ಮುಂದೆ ಬಹು ಪ್ರಯತ್ನದಿಂದ ಅಭ್ಯಸ್ಥಬುದ್ಧಿಯುಳ್ಳವರ ಅವಸ್ಥೆಯು ನಿಷ್ಫಲಯುಕ್ತವಾಗುವದೇ ಹೊರತು ಸಫಲವಾಗದು.

11-43 **ದುಷ್ಟೈರಾಚರಿತಾಂ ಕಿಮತ್ರ ಮತಿಮಾನ್ಮೃತ್ಯುಪ್ರದಾಂ ವಿಶ್ವಸೇತ್ ।**
ದುಷ್ಟರಿಂದ ಆಚರಿಸಲ್ಪಟ್ಟದ್ದು ಮೃತ್ಯುಸಾಧಕಗಳೇ! ಆದುದರಿಂದ ಬುದ್ಧಿವಂತ ರಾದವರು ಯಾರು ವಿಶ್ವಾಸಮಾಡಿ ವಶರಾಗುತ್ತಾರೆ?

12-27 **ಸ್ವಕುಕ್ಷಿಪೂರ್ತೌ ನ ರತಿರ್ಹಿ ಕಸ್ಯ ನಿಜಾನುಭಾವಸ್ಮರಣೋತ್ಸವೇ ಚ।**
ತನ್ನ ವೈಭವವನ್ನು ಸ್ಮರಿಸಿಕೊಂಬುವ ಸಂಭ್ರಮದಲ್ಲಿಯೂ ತನ್ನ ಹೊಟ್ಟೆಯನ್ನು ತುಂಬಿಸಿಕೊಳ್ಳುವದರಲ್ಲಿ ಯಾರಿಗೆ ಆಸಕ್ತಿ ಇರುವುದಿಲ್ಲ?

12-44 **ಕೀರ್ತಿಪ್ರತಾಪೌ ರಾಜೇಂದ್ರ ತತ್ರಾಲಸ್ಯಂ ಪ್ರತೀಪಕೃತ್ ।**
ಕೀರ್ತಿ ಪಡೆಯುವಲ್ಲಿ ಸ್ವಸಾಮರ್ಥ್ಯದ ಪ್ರತಾಪ ತೋರುವಲ್ಲಿ ಆಲಸ್ಯವಿದ್ದರೆ ಅದು ತನ್ನ ಉನ್ನತಿಯನ್ನು ಕಳೆಯುತ್ತದೆ.

12-53 **ಪ್ರಾಯೇಣ ಧನವಾನೇನ ಜಾಯತೇ ಕ್ಲೇಶವಾನಪಿ।**
ಬಹುಶಃ ಯಾವನು ಧನಿಕನೋ ಅವನೇ ಹೆಚ್ಚಿನ ಕ್ಲೇಶಗಳಿಗೆ ಭಾಗಿಯಾಗುವನು.

12-54 **ಕಾಲೇ ಕಾಲೇ ಧನಂ ನೂನಮರ್ಥಿಭ್ಯೋ ವಿತರೇದ್ಧಿಯಃ।**
**ಮುಚ್ಯತೇ ಸರ್ವ ಪಾಪೇಭ್ಯಃ।**
ಕಾಲಕ್ಕನುಗುಣವಾಗಿ ಪಾತ್ರಾನುಸಾರ ಪ್ರಾರ್ಥನಾನುಗುಣವಾಗಿ ಬುದ್ಧಿವಂತ ನಾದವನು ದ್ರವ್ಯವನ್ನು ಹಂಚುವನೋ ಅವನೇ ಸರ್ವದುಃಖದಿಂದಲೂ ದೂರನಾಗುವನು.

12-55 **ವಿತ್ತೈಃ ಕೀರ್ತಿಂ ಶರ್ರೈಃ ಶೌರ್ಯಂ ಪ್ರತ್ಯಹಂ ಯಃ ಸಮಾರ್ಜಯೇತ್ ।**
**ಸಏವ ಧನವಾನ್ ಸಮ್ರಾಡನ್ಯಂ ಮನ್ಯೇ ಹ್ಯಕಿಂಚನಮ್ ॥**
ಧನದಿಂದ ಕೀರ್ತಿಯನ್ನು ಆಯುಧಗಳಿಂದ ಶೌರ್ಯವನ್ನು ಯಾವನು ನಿತ್ಯದಲ್ಲಿಯೂ ಸಂಪಾದಿಸುತ್ತಾನೆಯೋ ಅವನೇ ನಿಜವಾದ ರಾಜನು. ಹಾಗಿಲ್ಲದವನು ಎಷ್ಟು ಧನಿಕನಾದರೂ ಬಲಿಷ್ಟನಾದರೂ ನಿರ್ಭಾಗ್ಯನೇ ಸರಿ.

12-56 **ಅರ್ಥಿಭ್ಯೋಽರ್ಥಮನಾದಿಶ್ಯ ಯಸ್ತನ್ನಿಕ್ಷಿಪತಿ ಕ್ಷಿತೌ।**
**ಮೃತ್ಸ್ನಾಂ ಸ್ವಯೋಗ್ಯಾಮಾದಾಯ ವಿತ್ತಂ ಭೂಮ್ಯೈ ಪ್ರದತ್ತವಾನ್॥**

ಯಾವನು ಅರ್ಥಿಗಳಿಗೆ (ಬೇಡುವವರಿಗೆ) ಧನವನ್ನು ಕೊಡದೆ, ಆರ್ಜಿತವಾದ ಧನವನ್ನು ಭೂಮಿಯಲ್ಲಿ ಬಚ್ಚಿಡುತ್ತಾನೆಯೋ ಅವನು ಸ್ವಯೋಗ್ಯ ಸಂಪತ್ತನ್ನು ಭೂಮಿಗೆ ಕೊಟ್ಟು ತಾನು ಮಣ್ಣುತಿಂದವನಾಗುವ.

12-58 **ವಿಷ್ಣುಭಕ್ತಿರತಂ ಭೂಪಂ ನೈವ ತ್ಯಕ್ಷತಿ ತತ್ಪ್ರಿಯಾ ।**
**ತದ್ವೇಷಿಣಿ ನ ಸಾ ಸ್ಥಾತುಮುತ್ಸಹೇತ ಪತಿವ್ರತಾ ॥** ವಿಷ್ಣುಭಕ್ತಿರತನಾದ ರಾಜನನ್ನು ವಿಷ್ಣುಪತ್ನಿಯಾದ ಲಕ್ಷ್ಮಿಯು ಎಂದಿಗೂ ಬಿಡದೆ, ಅವನ ದ್ವೇಷಿಗಳಲ್ಲಿ ಎಂದಿಗೂ ಸೇರದೆ, ಬಹು ಪತಿವ್ರತೆಯಾದುದರಿಂದ ತನ್ನ ಪತಿಯ ಭಕ್ತರಲ್ಲಿ ಬಹು ಉತ್ಸಾಹಯುಕ್ತಳಾಗಿ ಸ್ಥಿರಳಾಗಿರುತ್ತಾಳೆ.

12-59 **ಧರ್ಮೋಽನ್ಯೋ ನೈವ ಪೀಡಯೇತ್ ।**
ಶ್ರೇಷ್ಠವಾದ ವೈಷ್ಣವಧರ್ಮ ಉಳ್ಳವನಿಗೆ ಮಿಕ್ಕ ಯಾವ ಧರ್ಮವೂ ಎಂದಿಗೂ ಪೀಡಿಸಲಾರವು.

12-60 **ವಿಷ್ಣೋರರ್ಭಕಸಂಕಾಶಾನ್ವೈಷ್ಣವಾನ್ಯಸ್ತು ನಿಂದತಿ ।**
**ತತ್ರಾಪಿ ನ ಸ್ಥಿರಾ ಶ್ರೀಃ ಸ್ಯಾತ್ ।**
ವಿಷ್ಣುವಿನ ಮಕ್ಕಳಂತಿರುವ ವೈಷ್ಣವರನ್ನು ಯಾರು ದ್ವೇಷಿಸುತ್ತಾರೆಯೋ (ನಿಂದಿಸುತ್ತಾರೋ) ಅವರಲ್ಲಿ ಲಕ್ಷ್ಮಿಯು ಸರ್ವಥಾ ಸ್ಥಿರಳಾಗಿರುವುದಿಲ್ಲ.

12-61 **ದೋಷಿಣಂ ಗುಣಲಬ್ಧಾ ಶ್ರೀರ್ನಾಶ್ರಯೇದಿತಿ ಮೇ ಮತಿಃ ।**
ದೋಷಯುಕ್ತಯಾದವನನ್ನು ಗುಣಪಕ್ಷಪಾತಿಯಾದ ಲಕ್ಷ್ಮೀದೇವಿಯು ಬಿಟ್ಟು ಹೋಗುವಳು.

12-63 **ಸನ್ಮಂತ್ರಶೀರ್ಣೋ ದುರ್ಮಂತ್ರಃ ಪ್ರಯೋಕ್ತಾರಂ ಕ್ಷಿಣೋತಿ ಹಿ ।** ಸದ್ವಿಚಾರ ಬಿಟ್ಟು ದುರ್ಮಂತ್ರಗಳಲ್ಲಿ ನಿರತನಾದವನನ್ನು ತನ್ನನ್ನು ಉಪಯೋಗಿಸುವವನನ್ನು ಕ್ಷೀಣಗೊಳಿಸುತ್ತದೆ (ನಾಶಮಾಡುತ್ತದೆ).

12-65 **ಪ್ರಜಾನಾಂ ಪೀಡನಂ ಕೃತ್ವಾ ಯೋ ಲುಬ್ಧೋ ಧನಮಾರ್ಜಯೇತ್ ।**
**ವಿಕ್ರೇಯ ಸ್ವಸುತಾನೇವ ಸ ವೈ ಸಂಚಿನುತೇವಸು ॥**
ಯಾವ ರಾಜನು ಪ್ರಜರನ್ನು ಪೀಡಿಸಿ ಧನಗಳಿಸುವನೋ ಆ ರಾಜನು ತನ್ನ ಮಕ್ಕಳನ್ನೇ ಮಾರಿ ಧನಗಳಿಸಿದಂತೆ.

13-14 **ಲಕ್ಷ್ಮೀಶಪದೈಕಭಕ್ತಾಃ ತದನ್ಯದರ್ಚಂತಿ ತದೀಯಬುಧ್ಯಾ ।**
ಲಕ್ಷ್ಮೀಪತಿಯಲ್ಲೇ ಇಡಲ್ಪಟ್ಟ ಲಕ್ಷ್ಯಯುಳ್ಳ ಭಕ್ತರು ಅವನಿಂದ ಭಿನ್ನರಾದವರನ್ನು

ಅವನಲ್ಲಿ ಬುದ್ಧಿಯಿಂದಲೇ (ಶ್ರೀಹರಿಯನ್ನು ಅಂತರ್ಯಾಮಿಯಾಗಿ) ಪೂಜಿಸುವರಲ್ಲವೆ?

14–24 **ಅಸತಾಂ ಪುಣ್ಯಸರಿದಪ್ಯನಿಷ್ಟಸ್ಯ ಹಿ ಕಾರಣಮ್ ।**
ಪುಣ್ಯಕ್ಷೇತ್ರ ಪುಣ್ಯತೀರ್ಥಗಳೇ ಆದರೂ ಅಯೋಗ್ಯರಿಗೆ ಅನಿಷ್ಟಕ್ಕೆ (ಪಾಪಸಾಧನೆಗೆ) ಕಾರಣವಾಗುವದು.

14–33 **ದುರಾತ್ಮನಾಂ ವಕ್ತ್ರನಿರೀಕ್ಷಣಂ ಸ್ವೈರ್ಜನೈರ್ನ ಕಾರ್ಯಂ ತ್ವಿತಿಶಂಸತಿ ಸ್ಮ।**
ತನ್ನ ಭಕ್ತರಾದವರು ದುಷ್ಟರಾದ ಪಾಪಿಗಳ ಮುಖಗಳನ್ನೇ ನೋಡಬಾರದು ಎಂದು ಶ್ರೀಕೃಷ್ಣ ತಿಳಿಸುವವನಾದ.

14–38 **ತನ್ವೀ ತದೇತತ್ಸಕಲಂ ಸ್ವಲೋಲ ಲೀಲಾಕಟಾಕ್ಷೇಣ ಕರಿಷ್ಯತೀಯಮ್ ।**
ಕೋಮಲಾಂಗಿಯಾದ ರುಕ್ಮಿಣಿಯು ಜಗತ್ತಿನ ಸೃಷ್ಟ್ಯಾದಿ ಸಕಲ ಕಾರ್ಯಗಳನ್ನು ತನ್ನ ಚಲಿಸುವ ಆಟರೂಪದ ಕಡೆಗಣ್ಣಿನ ನೋಟಮಾತ್ರದಿಂದಲೇ ಮಾಡುತ್ತಾಳೆ.

14–57 **ಕಿಂ ಗಾಹನೇನ ತವ ತೀರ್ಥಚಯೇಷು ತಸ್ಯ ।**
ಪರಮ ಪಾವನತಮನಾದ ಭಗವಂತನಿಗೆ ಈ ಗಂಗಾದಿ ತೀರ್ಥಗಳ ಅವಗಾಹನದಿಂದ ಆಗಬೇಕಾದದ್ದೇನಿದೆ.

16–52 **ಧನಸ್ಯ ಲಾಭಾದಧಿಕೋಹಿ ಲೋಭಃ ।**
ಲೋಕದಲ್ಲಿ ಅತ್ಯಧಿಕ ಧನಲಾಭವು (ಶೇಖರಣೆ) ಅಧಿಕ ಲೋಭಕ್ಕೆ ಕಾರಣವಾಗುತ್ತದೆ.

16–53 **ನಾರ್ಯಾಸಹ ಸಂಗತಾನಾಂ ಕುತೋ ವಿವೇಕಃ ಕುತ ಏವ ವೇಲಾ ।**
ಸದಾ ನಾರಿಯರ ಸಂಗತರಾದವರಿಗೆ ಸಮೀಚೀನ ವಿವೇಕವೆಲ್ಲಿ? ಕಾಲವೆಲ್ಲಿಯದು?

16–55 **ಏಕಸ್ಯಾಮಭಿರತಿಮಿಚ್ಛತೋಃ ಕ್ವ ಮೈತ್ರೀ ।**
ಒಬ್ಬ ಸ್ತ್ರೀಯಲ್ಲಿ ಇಬ್ಬರಾಸಕ್ತರಾದರೆ ಅವರಲ್ಲಿ ಸ್ನೇಹ ಹೇಗೆ ಉಳಿದೀತು?

16–57 **ಯತಸ್ತದಿಷ್ಟಾಹರಂತಿ ಪಾಪಾನಿ ಮಹಾಂತಿ ದೃಷ್ಟಾಃ ।**
ಶ್ರೀಕೃಷ್ಣನಿಗೆ ಇಷ್ಟರಾದವರು (ಭಕ್ತರು) ದೊಡ್ಡ ದೊಡ್ಡ ಪಾಪಗಳನ್ನು ಕಳೆಯಲು ಶಕ್ತರಾಗಿರುತ್ತಾರೆ.

16–58 **ಕಲತ್ರವಸ್ತ್ರಕೃತಾಲಯಂ ಕಃ ಖಲು ಜೇತುಕಾಮಃ ।**
ಯಾರು ಹೆಂಡತಿಯ ಸೀರೆಯಲ್ಲೇ ಅಡಗಿರುತ್ತಾರೆಯೋ ಅವರನ್ನು ಯಾವನು ಜಯಿಸಲು ಬಯಸುವ?

16–59 **ನ ಕಸ್ಯ ಕಾಮಃ ಸರಸಸ್ಯ ಹಿ ಸ್ಯಾತ್ ।**
ರಸಿಕನಾದ ಯಾವನಿಗೆ ತಾನೆ ಕಾಮವು ಉದ್ರಿಕ್ತವಾಗದು?

17–63 **ಯಮಭಯಮಭಯಾಪ್ತ್ಯಾ ಸ್ವಸ್ಥವೃತ್ತಿರ್ನ ವೇತ್ತಿ।**
ಸಮೀಚೀನ ಜ್ಞಾನಹೊಂದಿ ಸ್ವಸ್ಥ ಚಿತ್ತರಾಗಿ ಇರುವವರು ಯಮನ ಭಯವನ್ನು ಅರಿತವರಾಗುತ್ತಿರಲಿಲ್ಲ.

18–9 **ಶ್ರೀಕೃಷ್ಣಪಾದಕಮಲಂ ಕುರುತಾತ್ ಶ್ರಿಯಂ ನಃ।**
ಶ್ರೀಕೃಷ್ಣನ ಪಾದಕಮಲಗಳು ಸದಾ ನಮಗೆ ಸಂಪತ್ಪ್ರದವಾಗಲಿ.

18–19 **ಪ್ರಭುರಪಿ ವಶಮೇತಿ ಪ್ರೇಮಭಾರೈರುದಾರೈಃ।**
ಎಂತಹ ಪ್ರಭುವಾದರೂ ಉದಾರತೆಯ ಪ್ರೇಮವೆಂಬ ಭಾರಕ್ಕೆ ವಶವಾಗುವನಲ್ಲವೇ?

18–40 **ಸದ್ವಂಶಭವಾ ಗುಣಾಢ್ಯಾಃ ನತಾಃ ಸಮರ್ಥಾ ಅಪಿಸರ್ವಸಂಧೌ।**
ಸದ್ವಂಶದಲ್ಲುತ್ಪನ್ನರಾಗಿ ಸದ್ಗುಣಗಳುಳ್ಳವರು ಸರ್ವಸಮಯದಲ್ಲಿ ಎಷ್ಟೇ ಸಮರ್ಥರಾಗಿದ್ದರೂ ಹಿರಿಯರಲ್ಲಿ ಬಾಗಿದವರೇ ಆಗಿರುತ್ತಾರೆ.

18–53 **ತತ್ತ್ವಂ ನಿಜಂ ಹರಿವಚಃ ಪರಿಬೋಧಯೇನ್ಮಾಮ್ ।** ಶ್ರೀಕೃಷ್ಣನ ವಚನಗಳು (ಗೀತಾದಿಗಳು) ನನಗೆ ತನ್ನ ತತ್ತ್ವಗಳನ್ನು ಅರುಹುವುದಾಗಲಿ.

18–55 **ಜೃಂಭನ್ಮುಕುಂದನಯನಂ ಮುಹುರೀಕ್ಷತಾನ್ಮಾಮ್ ।** ಪುಂಡರೀಕಾಕ್ಷನಾದ ಶ್ರೀಕೃಷ್ಣನ ನಯನಗಳು ಪುನಃಪುನಃ ನನ್ನನ್ನು ನೋಡುವುದಾಗಲಿ.

18–56 **ಮಸ್ಮಾಕಫಲಲಿಖಿತಂ ಕುರುತಾಲ್ಲಲಾಟಮ್ ।**
ಶ್ರೀಕೃಷ್ಣನ ಹಣೆಯು ನಮಗೂ ಹಣೆಯಲ್ಲಿ ಇಷ್ಟವಾದದನ್ನೇ ಬರೆಯಿಸುವುದಾಗಲಿ.

19–4 **ಲಕ್ಷ್ಮೀಂ ತನೋತು ಯದುಪುಂಗವರಾಜ್ಞಪಾಂಗಃ।**
ಶ್ರೀಕೃಷ್ಣನ ರಾಣಿಯಾದ ರುಕ್ಮಿಣಿಯ ಕಡೆಗಣ್ಣೋಟವು (ಕಟಾಕ್ಷವು) ನಮ್ಮಗಳಿಗೆ ಸಂಪತ್ತನ್ನುಂಟುಮಾಡಲಿ.

18–60 **ಕೃಷ್ಣೋ ಬಭೂವ ಸರಸಃ ಕಿಲ ನಿತ್ಯತೃಪ್ತಃ।**
ಶ್ರೀಕೃಷ್ಣ ನಮ್ಮನ್ನು ಯಥಾಯೋಗ್ಯ ಸಕಲ ಸಂತೃಪ್ತರನ್ನಾಗಿ ಮಾಡಲಿ.

---



# ಶ್ರೀರುಕ್ಮಿಣೀಶವಿಜಯ

ದ್ವೈತವೇದಾಂತ ವಾಙ್ಮಯದ ರಸಋಷಿಗಳೆನಿಸಿ ರಾರಾಜಿಸಿದ ಮಹಾವಿಭೂತಿ ಪುರುಷರು ಶ್ರೀವಾದಿರಾಜಯತೀಶ್ವರರು. ಉಭಯಸಾಹಿತ್ಯ ಮೇರುವಾಗಿ ರಚಿಸಿದ ಕೃತಿಗಳು ಅನೇಕ. ಸಾಹಿತ್ಯಪ್ರಪಂಚದಲ್ಲಿ ಇವರ ಅಸಾಮಾನ್ಯ ವೇದಾಂತಕಾವ್ಯ, ನವರಸಭರಿತ, ಪುರುಷಾರ್ಥ ಪ್ರದಾಯಕ ಮಹಾಕಾವ್ಯ ಶ್ರೀರುಕ್ಮಿಣೀಶವಿಜಯ.

ಶ್ರೀಮದಾಚಾರ್ಯ ಮಧ್ವರ ನಿರ್ಣಯಾನುಸಾರ ಶ್ರೀಮದ್ಭಾಗವತ ಹರಿವಂಶಾದಿ-ಗಳನ್ನಾಧರಿಸಿ, ಶಾಸ್ತ್ರ-ಕಾವ್ಯಗಳ ಸಂಗಮವಾಗಿ, ಛಂದೋಲಂಕಾರ ಯುಕ್ತಿಬದ್ಧ ತತ್ತ್ವಚಿಂತನೆಗಳ ಮಹಾಪೂರವಾಗಿ ಪ್ರಕಾಶಿಸುತ್ತಿದೆ. ಭಕ್ತಿರಸಾದಿಗಳ ಆವಿರ್ಭಾವವಾಗಿ ಶ್ರೀಕೃಷ್ಣನ ಪಾರಮ್ಯದೊಂದಿಗೆ ಸರಸಸುಂದರ ಲೀಲಾವರ್ಣನೆಗಳ ಕಾವ್ಯಧಾರೆಯಾಗಿ ಶ್ರೀಕೃಷ್ಣಾಮೃತವರ್ಷಿಣಿಯಾಗಿದೆ ಈ ಕಾವ್ಯ.

ಆಶುಕವಿಗಳಾದ ಶ್ರೀವಾದಿರಾಜ ಪೂಜ್ಯಚರಣರ ಈ ದಿವ್ಯಸಾಹಿತ್ಯ ಪಂಡಿತಪಾಮರರಿಗೆ ಚಿತ್ತಾಕರ್ಷಕ ಭಕ್ತಿವಿವರ್ಧಕವಾಗಿ ಇಷ್ಟಾರ್ಥಸಿದ್ಧಿಪ್ರದವಾಗಿದೆ. ಇದರ ಶ್ರವಣಾ ಪಾಪಹರ, ಪಠಣಾದಿ ಪುಣ್ಯಪ್ರದ, ಅಧ್ಯಯನದಿ ಜೀವನಪಾವನವನ್ನಾಗಿಸುವಲ್ಲಿ ಸಂಶಯವಿಲ್ಲ.

ಹತ್ತೊಂಬತ್ತು ಸರ್ಗಾತ್ಮಕವಾದ ಈ ಮಹಾಕಾವ್ಯ ರುಕ್ಮಿಣೀಶವಿಜಯವು ಶ್ರೀ ನಾರಾಯಣ ಭಟ್ಟರ ''ಗುರುಭಾವಪ್ರಕಾಶಿಕಾ'' ವ್ಯಾಖ್ಯಾನದೊಂದಿಗೆ ಪಂ|| ಸಂದೇಶಾಚಾರ್ಯ ಝಳಕೀಕರ್ ಅವರಿಂದ ಸುಂದರವಾಗಿ ಸಂಪಾದಿತವಾಗಿ ದ್ವೈತವೇದಾಂತ ಸಂಶೋಧನ ಪ್ರತಿಷ್ಠಾನ, ಬೆಂಗಳೂರು ಇದರಿಂದ ಪ್ರಕಾಶಿತಗೊಂಡಿದೆ.